॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

२३८

॥ श्रीः ॥

# काव्यप्रकाश-रहस्यम्

लेखकः—

श्री पं० देवदत्तशास्त्री विद्यानिधिः



चौखम्बा संस्कृत सीरिज आफिस, बनारस

मूल्यं १)

२३ जुलाई, मंगलवार

|| श्रीः ||


❖ हरिदास-संस्कृत-ग्रन्थमाला ❖

२३८


|| श्रीः ||

# काव्यप्रकाश-रहस्यम्


रचयिता–

अम्बालास्थ–दी० कृ० कि० स० ध० संस्कृतकालेजाध्यापकः

श्री पं० देवदत्तशास्त्री विद्यानिधिः ।





चौखम्बा-संस्कृत-सीरिज, बनारस–१

वि० संवत् २०१० ] [ ई० १९५३

# द्वित्राः शब्दाः

अयि साहित्यशास्त्ररसिकाः परीक्षार्थिनो विद्यार्थिनः। को न वेत्ति साहित्यशास्त्रमाहात्म्यम्। यस्मादृते पुरुषः पुच्छविषाणहीनः पशुरस्ति। यथा पशुर्व्यवहारेऽविदग्धोऽर्थाद् यथाव्यवहर्तव्यमस्ति न तथा व्यवहर्तुमर्हति तथैव साहित्यशास्त्रानभिज्ञः पुरुषो भवति। कामं स कियानपि छन्दोव्याकरणादिज्ञानवान् भवेत्तथापि साहित्यशास्त्रज्ञो यथा ललितललितानि पदानि प्रयुज्य परं वशंवदं कर्तुमलं न तथा स परं वशंवदं कर्तुमलम्। उदाहरणे यदि 'तव तातचरणाः समायाताः' इत्यस्य स्थाने तव मातुः पतिः ( ख़सम इति भाषा ) समायात इति प्रयुज्येत तर्हि दण्डादण्डि मुष्टीमुष्टि वा नूनं भवेत्। किं व्याकरणादिदृष्ट्या तत्र दोषोऽस्ति ? नास्ति तत्र व्याकरणादिदृष्ट्या कश्चनापि दोषः। एतावदेव न तदनभिज्ञस्य जगदम्बाया अपि कलङ्कशङ्कायां नास्ति संशयः। 'भूतयेऽस्तु भवानीशः' इत्यादितः स्पष्टमिदमतः 'साहित्य-सङ्गीतकलाविहीनः' इत्यादि सम्यगेवोक्तं केनापि कवितल्लजेन। अस्तु साहित्यशास्त्रस्य ग्रन्थेषु काव्यप्रकाशः प्रकाशतेतरामिति नाविदितं साहित्यसदनजुषां विपश्चिताम्। एष ग्रन्थः सर्वप्रान्तानां तत्तत्परीक्षासु

निर्धारितोऽस्ति । समयवशादद्यत्वे बुद्धीनां ह्रासो जातो गम्भीरतरश्चायं ग्रन्थः रहस्याभ्यासमन्तरेण छात्राणां न सम्यग्बुद्धिमधिरोहति । चौखम्बा-संस्कृतपुस्तकालयाध्यक्षैश्चाहं काव्यप्रकाश-रहस्य( प्रश्नोत्तरी )निर्माणे प्रेरितः । तन्मया समयगतिमवलोक्य वामनाचार्यादिटीका मवलम्ब्य रह-स्यमिदं व्यलेखि । मन्येऽनेन परीक्षार्थिनां विद्यार्थिनां महानुपकारो भविष्यति । या अत्रानवधानतया त्रुटयो भविष्यन्ति ताः क्षमिष्यन्ते गुणैकपक्षपातिनो विद्वांसः ।

विदुषामनुचरः—

**देवदत्तः**

# काव्यप्रकाश-रहस्यम्

महेश्वरं नमस्कृत्य साम्बविघ्नेश्वरं तथा ।
परमेशं गुरुं वन्दे काव्यविद्याविशारदम् ॥

## अथ प्रथमोल्लासः

प्रश्नः—काव्यस्य किं प्रयोजनम् ?

उत्तरम्—प्रवृत्तिम्प्रतीष्टसाधनताज्ञानं कारणं भवतीत्यतः काव्यप्रयोजनमाह—काव्यं कालिदासादीनामिव यशसे भवति । धावकादीनामिव धनप्राप्तये भवति । धावकनामा कविः रत्नावलीनाम्नीं नाटिकां विरच्य श्रीहर्षाद् बहुधनं लब्धवानिति प्रसिद्धिः । राज्ञि मन्त्रिणि गुरौ मुन्यादौ च कथं व्यवहर्तव्यमित्यस्य ज्ञानमपि काव्याद् भवति । अमङ्गलनिवृत्तिरपि काव्याद् भवति । पुरा हि मयूरनामा कविः कुष्ठरोगाक्रान्तः सूर्यशतकेन सूर्यं तुष्टाव तेन तुष्टः सूर्यस्तस्मै रमणीयां तनुं ददाविति किंवदन्ती । सद्यः परनिर्वृतिरपि काव्यप्रयोजनमर्थात् सद्यः काव्यश्रवणानन्तरमेव परस्य उत्कृष्टस्य ब्रह्मानन्दसहोदरस्य रसास्वादनसमुद्भूतस्य स्वविषयातिरिक्तज्ञेयान्तरसंसर्गशून्यस्य आनन्दस्य निर्वृत्तिः निष्पत्तिः । कान्तासदृशोपदेशदानञ्च काव्यप्रयोजनम् । अयं भावः—त्रिविधः शब्दो भवति प्रभुसम्मितः, सुहृत्सम्मितः, कान्तासम्मितश्च । यथा राजा इष्टसाधनेऽनिष्टसाधने निष्फले च कर्मणि प्रवर्तयति तथैव वेदादिशास्त्रमपि ज्योतिष्टोमादाविष्टसाधने श्येनयागादावनिष्टसाधनेऽकरणप्रयुक्तप्रत्यवायपरिहारातिरिक्तफलरहिते सन्ध्यावन्दनादौ च प्रवर्तयति । पुराणेतिहासादयश्च सुहृत्सदृशाः सन्ति । यथा सुहृदेवं कृते एवं भवतीति वस्तुतत्त्वं बोधयति तथैव पुराणेतिहासादिरपि । कान्तासदृशं काव्यमस्ति । यथा कान्ता गुर्वाद्यधीनमपि कान्तं निजचातुर्येण स्वानुगं विधायोपदिशति तथैव काव्यमपि नीतिशास्त्रपराङ्मुखान् राजकुमारादीन् ललितपदकदम्बोपदर्शितशृङ्गारादिरसेन स्वानुगं विधाय रामादिवत् प्रवर्तितव्यं न रावणादिवदित्याद्युपदिशति ।

**प्रश्नः—काव्यस्य कारणतामभिधाय शक्त्यादीनां कारणता तृणारणिमणिन्यायेन दण्डचक्रचीवरन्यायेन वेति प्रतिपादयत ।**

**उत्तरं**—काव्यस्य शक्त्यादीनि त्रीणि कारणानि सन्ति । शक्तिः कवित्वबीजरूपा, यामन्तरा काव्यं न प्रसरति प्रसृतं वा हास्यास्पदं स्यात् । लोकशास्त्रकाव्याद्यवेक्षणम् लोकस्य स्थावरजङ्गमात्मकस्य लोकवृत्तस्य छन्दोव्याकरणादीनां शास्त्राणां महाकविसम्बन्धिनां काव्यानाम् अवेक्षणम् पर्यालोचनम् । तस्मात् निपुणता = चातुर्यम् काव्यज्ञस्य पुरुषस्य शिक्षया अभ्यासः मुहुर्मुहुः प्रवृत्तिः । एते त्रयो मिलिता हेतवः सन्ति । एतेषां कारणत्वं दण्डचक्रचीवरन्यायेन यथा घटम्प्रति दण्डस्य चक्रस्य चीवरस्य च मिलितस्य न तु स्वतन्त्रस्य दण्डादेरेवमेव शक्त्यादित्रयं मिलितं हेतुर्न तु स्वतन्त्रं कारणम् । यथा तृणाव्यवहितोत्तरजायमानवह्निम्प्रति तृणं स्वतन्त्रं कारणमरण्यव्यवहितोत्तरजायमानवह्निम्प्रति अरणिः स्वतन्त्रं कारणमेवं काव्यम्प्रति शक्त्यादिकं न स्वतन्त्रं कारणमत एव मम्मटपादैः 'इति हेतुस्तदुद्भवे' इत्यत्र हेतुरित्येकवचनमुपात्तम् ।

**प्रश्नः—काव्यस्य किं लक्षणम् ? काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तं प्रत्येकपर्याप्तं वा ?**

**उत्तरं**—शब्दार्थौ काव्यमुच्येते, यतो ह्यास्वादव्यञ्जकतोभयोर्वर्वर्ति । काव्यं पठितं श्रुतं गीतं रचितम्, काव्यं बुद्धमित्युभयविधव्यवहारदर्शनात् । ननु काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तं प्रत्येकपर्याप्तं वा ? आद्ये एको न द्वाविितिवत् श्लोकवाक्यं न काव्यमिति व्यवहारापत्तिः । द्वितीये एकस्मिन् पद्ये काव्यद्वयव्यवहारापत्तिः । तस्माद् रमणीयार्थप्रतिपादकः शब्दः काव्यमित्येव युक्तमिति चेन्न आस्वादव्यञ्जकताया उभयत्रापि समानत्वात् । काव्यं पठितं काव्यं श्रुतं काव्यं बुद्धमित्युभयविधव्यवहारदर्शनाच्च । अतः काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्ति । न च तथात्वे केवले शब्देऽर्थे वा काव्यव्यवहारानापत्तिरिति वाच्यम्, 'समुदाये प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इत्याश्रयणात् । भवति हि तैलं भुक्तं घृतं भुक्तमित्यादिषु समुदाये प्रवृत्तानां तैलादीनामवयवेषु वृत्तिः । अदोषौ = दोषरहितौ, निःशेषेत्यादावुत्तमत्वप्रयोजकोपाधेरेवोदाहरणान्न विरोधः । प्रविरलविषयता निर्विषयता वा काव्यस्य न भवितुमर्हति पदमात्रस्यापि तथा सम्भवेन निर्विषयताया अभावात् । वाक्यं रसात्मकं काव्यमिति नवीनोक्तं तु न युक्तं रसाभासात्मके काव्ये वस्त्वलङ्कारप्रधानेषु काव्येषु चाव्याप्तेः ।

न चेष्टापत्तिर्महाकविसम्प्रदायभङ्गप्रसङ्गात् । महाकविभिर्जलप्रवाहवेगादीनि कपिबालचरितानि च वर्णितानि । तेषु नूनं लक्षणस्याव्याप्तिः । यदि तु तत्रापि कथञ्चिद् रसस्पर्शोऽस्तीत्युच्यते हन्त तर्हि ईदृशो रसस्पर्शस्तु गौश्चलति पश्य मृगो धावतीत्यादावप्यस्तीति तेषामपि काव्यत्वापत्तिः । दोषत्वं नाम उद्देश्यप्रतीतिप्रतिबन्धकत्वम् । तच्च तत्तद्व्यङ्ग्यवाच्यवैचित्र्यप्रतीतिविरहविशिष्टदोषस्य तज्ज्ञानस्य चातो विशिष्टाभावासंभवात् न्यक्कार इत्यादौ न दोषः । सगुणौ = गुणाभिव्यञ्जकौ यद्यपि 'ये रसस्याङ्गिनो धर्माः' इति रीत्या माधुर्यौजःप्रसादाख्या गुणा रसनिष्ठाः सन्ति तथापि सगुणावितिपदेन गुणाभिव्यञ्जकाविति विवक्षितम् । अत एवाष्टमोल्लासे 'गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता' इति गदितम् । अनलङ्कृतीत्यत्र नञोऽल्पार्थकत्वात् सर्वत्र सालङ्कारौ क्वचिदस्फुटालङ्कारावपि शब्दार्थौ काव्यम् । ननु अस्फुटालङ्कारस्य उदाहृते 'यः कौमारहरः' इत्यादिपद्ये विभावनाविशेषोक्ती अलङ्कारौ स्फुटौ वरोपकरणादीनामनुपभुक्तत्वरूपकारणस्याभावेऽपि उत्कण्ठारूपस्य कार्यस्य सत्त्वात् । उपभुक्तत्वस्यकारणसत्त्वेऽपि तत्कार्यस्यानुत्कण्ठारूपस्याभावाच्चेति चेन्न आर्थिकस्याभावकथनस्य सत्त्वेऽपि अभाववाचकनञादिपदेन तदकथनात् । विप्रलम्भश्रृङ्गारस्य स्फुटत्वाद् रसवदलङ्कारस्तु न शङ्कनीयः, रसस्यात्र प्रधानत्वात् । अतः 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इदमेव काव्यलक्षणं समीचीनमिति सिद्धम् ।

इति प्रथमोल्लासः ।



## अथ द्वितीयोल्लासः

प्रश्नः—कतिविधाः शब्दाः ? कतिविधाश्चार्थाः ? किञ्च तेषां शब्दानां स्वरूपम् ?

उत्तरं—त्रिविधः शब्दोऽस्ति वाचको लाक्षणिको व्यञ्जकश्च । त्रिविधाश्चार्थाः सन्ति वाच्यः, लक्ष्य व्यङ्ग्यश्च । साक्षात् सङ्केतितमर्थं यो वक्ति स वाचकः । साक्षात् सङ्केतस्तु 'अस्मात् पदादयमर्थो बोद्धव्यः' अथवा 'इदं पदमिममर्थं बोधयतु' इत्येवं बोधकतारूपः । यथा गङ्गापदस्य भगीरथरथखातावच्छिन्नजलप्रवाहे साक्षात् सङ्केतोऽस्ति तद्बोधनात् गङ्गाशब्दो वाचकः । लक्षणाश्रयः शब्दो लाक्षणिक उच्यते ।

यथा गङ्गापदेन लक्षणावृत्त्या यदा गङ्गातीरस्य बोधस्तदा गङ्गाशब्दो लाक्षणिकः । व्यञ्जनावृत्तियुक्तः शब्दो व्यञ्जक उच्यते । यथा गतोऽस्तमर्क इत्यनेन जारगमनसमयादीनां बोधः । इत्थञ्चोपाधिभेदाच्छब्दभेदः ।

प्रश्नः—अभिहितान्वयवादिनामन्विताभिधानवादिनाञ्च किं मतम् ?

उत्तरं—अभिहितानां स्वस्ववृत्त्या पदैरुपस्थितानामन्वय इति वादिनां भाट्टमीमांसकानामित्यर्थः । आकाङ्क्षायोग्यतासन्निधिवशात् = यत्पदं विना यत् पदं शाब्दबोधं जनयितुं नालं तत्पदेन तस्याकाङ्क्षा भवति, एकपदार्थेऽपरपदार्थसम्बन्धो योग्यता, पदानामविलम्बेनोच्चारणं सन्निधिः' एतादृशात् पदार्थानां परस्परसम्बन्धे बुभुत्सिते तात्पर्याख्यवृत्तिप्रतिपाद्यो वाच्याद्यर्थविलक्षणशरीरोऽपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम् । अयं भावः-घटं करोतीत्यत्र घटवृत्तिकर्मत्वानुकूला कृतिरित्यर्थः प्रतीयते तत्र घटशब्दस्य घटोऽर्थः अम्प्रत्ययस्य च कर्मता वृत्तिता तु न कस्याप्यर्थोऽतोऽपदार्थोऽपि वृत्तिता तात्पर्यवशात्तत्र भासते । पदानि अन्वितानि भूत्वा विशिष्टमर्थं बोधयन्तीति यो वदति सोऽन्विताभिधानवादीत्युच्यते । 'देवदत्त गामानये'ति उत्तमवृद्धप्रयोगात् सास्नादिमतीं व्यक्तिं मध्यमवृद्ध आनयति तच्चेष्टया तस्य वाक्यस्य तदर्थबोधकतामनुमायानन्तरं 'गां नयाश्वमानय' इति प्रयोगे गवापसरणमश्वाहरणञ्च दृष्ट्वाऽन्वयव्यतिरेकाभ्यां क्रियापदार्थान्विते कारके कारकपदस्य, कारकपदार्थान्वितक्रियायाञ्च क्रियापदस्य शक्तिं बालो निश्चिनोति । अतःप्रयोगकाले तस्य प्रथमतोऽन्वितबुद्धिर्जायते । तेनाभिधयैवान्वयबोधोपपत्तौ किं तात्पर्याख्यवृत्तिस्वीकारेण । अतः परस्परान्विताः पदार्था एव वाक्यार्थो न तु पदार्थानां सम्बन्धो वाक्यार्थ इत्यन्विताभिधानवादिनो गुरोर्मतम् ।

प्रश्नः—'सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते' इति व्याख्यायताम् ।

उत्तरं—शब्द एव व्यञ्जको नास्ति प्रत्युत वाच्यार्थः, लक्ष्यार्थः, व्यङ्ग्यार्थश्चापि प्रायेण व्यञ्जका भवन्तीति कारिकार्थः । वक्त्रादिसम्बन्धाभावेऽर्थान्तरव्यञ्जकता न भवितुमर्हति तस्मात् 'प्रायश' इत्युक्तम् । अथवा प्रधानस्य रसादेरव्यञ्जकत्वमिति 'प्रायश' इत्युक्तम् । अपिशब्दः शब्दसमुच्चयार्थो व्यञ्जकतादशायामपि वाचकत्वाद्यविघातसूचनाय वा । कामिनीरूपवक्तृसम्बन्धात् वाच्यार्थस्य व्यञ्जकत्व उदाहरणम्—'मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया । तद् भण किं करणीयमेवमेव न वासरः स्थायी ॥' प्रतिपाद्यसम्बन्धात् लक्ष्यार्थस्य व्यञ्जकत्वे—'साधयन्ती सखि

सुभगम्' इत्याद्युदाहरणम्। व्यङ्ग्यार्थस्य व्यञ्जकत्वे 'पश्य निश्चलनिष्पन्दा' इत्याद्युदाहरणम्। पूर्वत्र स्वच्छन्दविहारार्थिनीति व्यज्यते, द्वितीये मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम्। तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम्। तृतीये निष्पन्दत्वेनाश्वस्तत्वम्। तेन च जनरहितत्वम्। अतः सङ्केतस्थानमेतदिति कयाचित् कश्चित् प्रत्युच्यते। अथवा मिथ्या वदसि न त्वमत्रागतोऽभूरिति व्यज्यते।

प्रश्नः—'सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा' इति व्याख्यायताम्।

उत्तरं—सङ्केतश्चतुर्षु गृह्यते जातौ गुणे क्रियायां द्रव्ये च। चतुष्टयी शब्दानां प्रवृत्तिरिति मतेनेदं व्याख्यानम्। पूर्वमीमांसकानुसारेण सर्वेषां शब्दानां जातिरेव सङ्केतविषयः। ननु घटं नय घटमानयेत्यादिव्यवहारे व्यक्तिरेवोपयोगिनी दृश्यते तत्कथं जात्यादिषु चतुर्षु सङ्केतोऽभ्युपगम्यते इति चेन्न, एकस्यां व्यक्तौ सङ्केत उत सर्वासु आद्ये व्यभिचारो यतो हि यस्यां व्यक्तौ सङ्केतोऽस्ति सैव शाब्दबोधविषयः स्यान्नान्या। शाब्दबोधम्प्रति सङ्केतज्ञानस्य कारणत्वात्। भवति चान्यस्या अपि बोधोऽतो व्यभिचारः। अन्त्ये व्यक्तीनां बहुत्वादानन्त्यदोषः। किञ्च गोत्वजातिमान् शुक्लगुणवान् चलनक्रियावान् डित्थनामायमिति तात्पर्येण गौः शुक्लश्चलो डित्थः, इत्यस्य व्यक्तिशक्तिवादे घटकलशयोरिव सहप्रयोगो न स्यात्। अतो व्यक्तेरुपाधौ सङ्केतः। उपाधिर्द्विविधोऽस्ति वस्तुधर्मः, वक्तृयदृच्छासन्निवेशितश्च। आद्यो द्विविधोऽस्ति सिद्धः साध्यश्च। सिद्धोऽपि द्विविधोऽस्ति व्यवहारयोग्यताप्रदो विशेषाधानहेतुश्च। व्यवहारयोग्यताप्रद एव जातिरित्युच्यते तां विना व्यवहाराभावात्। तथा चोक्तं वाक्यपदीये 'न हि गौः स्वरूपेण गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौः' स्वरूपेण गौः गोव्यवहारविषयो नास्तीतरथा स्वरूपाविशेषात् घटोऽपि गौः स्यात्। नापि स्वरूपेणागौरिति व्यवहारविषयः। गवि गोत्वमेव गौरिति व्यवहारहेतुः। विशेषाधानहेतुर्गुणो भवति गवादिषु शुक्लादिर्विशेषतामादधाति। साध्यः क्रियेत्युच्यते सा चोपक्रमप्रभृत्यपवर्गपर्यन्ता बोध्या। डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं वर्णक्रमज्ञानशून्यं स्फोटरूपं वक्त्रा स्वेच्छया डित्थादिष्वर्थेषु यो विशेषणतया सन्निवेश्यते स यदृच्छाशब्दः। अयमेव संज्ञाशब्दो द्रव्यशब्द इति चोच्यते। परमाण्वादिशब्दा यद्यपि जातिप्रवृत्तिनिमित्तकाः सन्ति तथापि गुणमध्यपाठात् पारिभाषिकं गुणत्वं तेषां वैशेषिकादौ स्वीक्रियते। खड्गे दर्पणे तैलादौ च यथैकमेव मुखं भिन्न-

मिव प्रतीयते तथैव वस्तुत एकरूपाणामपि गुणक्रियायदृच्छानामाश्रयभेदाद् भेद इव भवति न तु वस्तुतो भेदः । मीमांसकास्तु जातिरेव प्रवृत्तिनिमित्तमिति मन्वते । तथाहि—हिमे पयसि शङ्खे भिन्नः शुक्लो गुणस्तथापि शुक्लः शुक्ल इति व्यवहारस्त्रिष्वपि तुल्य एव तत्कारणं शुक्लत्वम् । एवं गुडपाके तण्डुलपाके च पाकः पाक इति समाना प्रतीतिर्दृश्यते तत्र कारणं पाकत्वम् । इत्थमेव बालवृद्धशुकाद्युच्चारितेषु डित्थादिशब्देषु प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्ति । तस्मात् समेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तम् । जातिविशिष्टेऽतद्व्यावृत्तिरूपेऽपोहे वा शक्तिरिति तु प्रकृते नोपयुज्यते । उपाधेयस्य व्यङ्ग्यत्वसम्भवात् स वाद एव प्रकृतोपयोगी ।

प्रश्नः—लक्षणायाः किं लक्षणम् ?

उत्तरं—साक्षात् सङ्केतितार्थस्य बाधे सति साक्षात् सङ्केतितार्थेन युक्तः, प्रसिद्धेः प्रयोजनाद्वा यया वृत्त्या मुख्यार्थातिरिक्तोऽर्थो लक्ष्यते सा वृत्तिर्लक्षणा भण्यते । सा च शब्द आरोपितो व्यापारो न तु स्वाभाविकः । यथा कर्मणि कुशल इत्यत्र 'कुशान् लाति' इति व्युत्पत्त्या कुशग्राह्यर्थोऽवगम्यते तेन मुख्यार्थबाधः । अतो विवेचकत्वादौ प्रसिद्धेर्मुख्येनामुख्यश्चतुररूपोऽर्थो लक्ष्यते । गङ्गायां घोष इत्यत्र गङ्गापदस्य जलप्रवाहे शक्तिस्तत्र च घोषनिष्ठाधेयतानिरूपिताऽऽधारता न भवितुमर्हतीति मुख्यार्थबाधः । अतो गङ्गापदं स्वसामीप्यसम्बन्धसम्बन्धिनं तटं लक्षयति । प्रयोजनञ्चात्र शीतपावनत्वादिव्यञ्जनम् ।

**प्रश्नः—मण्डनमिश्रमत उपादानलक्षणायाः किमुदाहरणम् ? कथञ्च तन्निरासः ।**

उत्तरं—मण्डनमिश्रमते गौरनुबन्ध्य इत्युपादानलक्षणाया उदाहरणमस्ति । तथाहि-मीमांसकराद्धान्ते पदानां जातौ शक्तिरस्ति । जातेश्चानुबन्धनं को नाम कर्तुमलमतो जात्या व्यक्तिर्लक्ष्यते । शब्दस्य तु न व्यक्तिबोधने सामर्थ्यम् 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायात् । गोशब्दोऽभिधया गोत्वजातिं बोधयित्वा विरमति ततश्च व्यक्तिबोधने न व्याप्रियते । शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति नियमात् । इति मण्डनमिश्रमतं तदसमीचीनमत्र प्रयोजनस्य रूढेश्चाभावात् । उक्तोदाहरणे तु व्यक्तेराक्षेपादेव भानं 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इति सिद्धान्तात् । व्यक्तिमन्तरा जातिर्न स्थातुमर्हति । यथा क्रिय-

तामित्यत्र कर्ता पिण्डीमित्यत्र भक्षयेति चाक्षिप्यते तथैव गौरनुबन्ध्य इत्यत्राक्षेपादेव व्यक्तिभानं भविष्यतीति नेदमुपादानलक्षणाया उदाहरणम्।

प्रश्नः—अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यमित्यादिव्याख्यायताम्—अथवा शुद्धाया गौणीतः को भेद इत्यत्र मुकुलभट्टमतं प्रतिपाद्य निराकुरुत।

उत्तरं—सिद्धान्ते सादृश्यसम्बन्धवती लक्षणा गौणी, सादृश्येतरसम्बन्धवती लक्षणा शुद्धा कथ्यते। मुकुलभट्टमते तु गौण्यां शक्यार्थलक्ष्यार्थयोः सादृश्याख्यसम्बन्धेनाभेदः शुद्धायां तु शक्यार्थलक्ष्यार्थयोर्भेदः प्रतीयते। भेदप्रतीतिरूपं ताटस्थ्यमेव शुद्धाया गौणीतो भेदकं न तूपचारामिश्रणमिति। तन्न, अनयोः शुद्धाभेदयोर्लक्ष्यस्य तीरादेः लक्षकस्य गङ्गादेश्च भेदप्रतीतिरूपं ताटस्थ्यं नास्ति तटादीनां गङ्गात्वादिनोपस्थितावेव प्रतिपादयितुमिष्टस्य शीतपावनत्वादेर्ज्ञानं भवितुमर्हति। यदि गङ्गासम्बन्धमात्रस्यैव प्रतीतिस्तर्हि गङ्गायां घोष इति लाक्षणिकस्थलस्य गङ्गातटे घोष इति मुख्यस्थलात् को भेदः स्यादिति।

प्रश्नः—गौर्वाहीक इत्यत्र मतजातमुपपाद्य ग्रन्थकृत्सम्मतं मतं प्रतिपादयत।

उत्तरं—गौर्वाहीक इत्यत्र मतत्रयं विद्यते। तथाहि–गोत्वसहचारिणो ये जाड्यमान्द्यादयो गुणा लक्ष्यमाणाः सन्ति ते वाहीकार्थाभिधाने प्रवृत्तिनिमित्ती भवन्ति। अर्थाद् गोशब्दस्य जाड्यमान्द्यादिषु गुणेषु लक्षणा, तैर्गोशब्दो वाहीकार्थमभिदधाति। अयं भावः—गोशब्दोऽभिधया सास्नादिमत्पिण्डं बोधयति। वाहीकस्तु शास्त्रीयाचाराद् वहिर्भव इत्यर्थं बोधयति। अनयोरन्वयोऽनुपपन्नोऽतो गोशब्दो जाड्यमान्द्यादिगुणान् लक्षयित्वा तानेव प्रवृत्तिनिमित्तीकृत्य वाहीकार्थमभिदधाति। तथा च जाड्यमान्द्यादिमदभिन्नो वाहीक इति बोधो भवति। अन्ये तु गोत्वसहचारिगुणाभेदेन वाहीकार्थगता गुणा एव लक्ष्यन्ते न तु वाहीकार्थोऽभिधीयते। एतन्मते गोगतजाड्यसजातीयजाड्यवान् वाहीक इति बोधः। अपरे तु सजातीयजाड्यमान्द्यादिगुणाश्रयत्वेन वाहीकार्थ एव लक्ष्यते। अस्मिन् मते जाड्यादिगुणविशिष्टे लक्षणा। उक्तञ्च—

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता॥

मुख्यार्थस्य स्वीकारे प्रत्यक्षादिना विरोधे अभिधेयेन वाच्यार्थेन अविनाभूतं सम्बद्धं तस्य प्रतीतिः प्रतीतिकरणभूतो व्यापारो लक्षणेत्युच्यते । लक्ष्यमाणा ये जाड्यमान्द्यादिगुणास्तैर्योगात् सम्बन्धात् या वृत्तिर्गोशब्दस्य वाहीकार्थोपस्थापकता तस्या गौणतेष्टा गुणानामियमिति गौण्यन्वर्थिकेयं लक्षणा । अत्रान्तिममेव ग्रन्थकृत्सम्मतं मतं यतो हि प्रथममते गोशब्दस्य वाहीके सङ्केताभावात् । शाब्दबोधम्प्रति च सङ्केतज्ञानस्य कारणत्वात् । द्वितीयमते द्वयोर्भिन्नत्वाद् गौर्वाहीक इति सामानाधिकरण्यानुपपत्तिः ।

प्रश्नः—यस्य प्रतीतिमाधातुमित्यादि व्याख्यायताम् ।

उत्तरं—यस्य शीतपावनत्वादेः प्रतीतिं जनयितुं लक्षणा आश्रीयते । लाक्षणिकशब्दमात्रगम्ये शीतपावनत्वादिरूपे तस्मिन् फले प्रयोजने व्यञ्जनाया ऋतेऽन्यो व्यापारो नास्ति । अभिधा तत्र न भवितुमर्हति गङ्गादिशब्दानां शीतत्वपावनत्वादिषु सङ्केताभावात् । मुख्यार्थबाधः, मुख्यार्थयोगः, रूढिप्रयोजनान्यतरच्चैतत् त्रयं लक्षणाया हेतुरस्ति । उक्तहेत्वभावाल्लक्षणापि न भवितुमर्हति ।

प्रश्नः—लक्ष्यं न मुख्यमित्यादिकारिका व्याख्येया ।

उत्तरं—लक्ष्यार्थस्तटो मुख्यो नास्ति नापि लक्ष्ये तटे कश्चन बाधोऽस्ति । नापि तटस्य शीतत्वपावनत्वादिना कश्चित् सम्बन्धोऽस्ति फलस्य प्रवाहसमवेतत्वात् । प्रयोजनस्य लक्ष्यत्वे किञ्चित् प्रयोजनं नास्ति । नापि च गङ्गाशब्दः स्खलन्ती प्रच्युता भवन्ती गतिर्यस्यैवं भूतोऽस्ति । अर्थात् प्रयोजनप्रतिपादने गङ्गाशब्दोऽसमर्थो नास्ति । अभिधालक्षणे च न प्रयोजनं प्रतिपादयितुमलमतः प्रयोजनप्रतिपत्त्यर्थं व्यञ्जनैवाश्रयणीया ।

प्रश्नः—'एवमप्यनवस्था स्याद् या मूलक्षयकारिणी' इति व्याख्यायताम् ।

उत्तरं—किञ्च यदि प्रयोजनेऽपि लक्षणा स्यात्तर्ह्यनवस्थाप्रसङ्गः । प्रथमप्रयोजनस्य लक्ष्यत्वे प्रयोजनान्तरस्वीकारे च तत्रापि प्रयोजनान्तरं तत्रापि प्रयोजनान्तरमित्येवं मूलक्षयकारिणी गङ्गायां घोष इत्यत्र तीरस्य या लक्ष्यत्वेन शीतत्वपावनत्वस्य च प्रयोजनत्वेन प्रतीतिस्तस्या अपि क्षयकारिणी नूनमनवस्था स्यात् । अनवस्था चाप्रामाणिकानन्तपदार्थकल्पनयाऽविश्रान्तिरिति बोध्यम् । न च बीजाङ्कुरन्यायेनानवस्था न दोषायेति वाच्यम् 'मूलक्षतिकरीं चाहुरनवस्थां च दूषणम्' इत्युक्तेः ।

प्रश्नः—विशिष्टे कथं न लक्षणा ?

उत्तरं—ननु मा भवतु प्रयोजने लक्षणा शीतत्वपावनत्वविशिष्टतीर एवास्त्विति चेन्न ज्ञानविषयस्य ज्ञानफलस्य च भिन्नत्वात् । यथा प्रत्यक्षस्य नीलादिर्विषयोऽस्ति तत्र मीमांसकमते फलं प्रकटताऽस्ति । तस्या आकारस्तु मया नीलो ज्ञात इति बोध्यः । नैयायिकमते संवित्तिरर्थादनुव्यवसायस्तत्र फलम् । ज्ञानस्य ज्ञानमनुव्यवसाय उच्यते यथा अहं नीलं जानामि । यथा दर्शितस्थले विषयफलयोर्नितरां भेदस्तथैव लक्ष्यप्रयोजनयोरपि मन्तव्यः । एवञ्च प्रयोजनीभूतस्य शीतत्वपावनत्वादेः प्रतीत्यर्थं व्यञ्जनैव स्वीकार्येति स्थितम् ।

प्रश्नः—'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्युपादानलक्षणाया उदाहरणं भवितुमर्हति न वा ?

उत्तरं—ननु 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति वाक्ये रात्रिभोजनवानिति लक्ष्यते । प्रयोजनञ्चात्र भोजनाभावसमानाधिकरणपीनत्वयुक्तोत्कर्षस्य प्रतीतिः । 'दिवा न भुङ्क्ते' इति मुख्यार्थमादायैव भवति तस्मादियमुपादानलक्षणेति चेन्न कुमारिलभट्टमते श्रुतार्थापत्त्या गुरुमतेऽर्थापत्त्या निर्वाहात् । यत्रानुपपद्यमानः शब्दः शब्दान्तरं कल्पयति सा श्रुतार्थापत्तिः । यत्र दृष्टः श्रुतो वाऽर्थोऽर्थान्तरं कल्पयति साऽर्थापत्तिः । दिवा भोजनाभाववतः पीनत्वं रात्रिभोजनं विनानुपपन्नमतः श्रुतार्थापत्त्याऽर्थापत्त्या वा कार्यसिद्धिः ।

प्रश्नः—अभिधेयाविनाभूतेत्यादिभट्टवार्तिकेऽविनाभूतशब्दस्य कोऽर्थः ?

उत्तरं—अविनाभावशब्दस्यात्र वार्तिके सम्बन्धमात्रमर्थो न तु व्याप्तिः । यदि नाम व्याप्त्यर्थः स्यात्तर्हि मञ्चाः क्रोशन्तीत्यादौ लक्षणा न स्यात् । व्याप्त्यर्थकत्वेऽनुमानादिनैव सिद्धे लक्षणाया उपयोगो न स्यात् ।

प्रश्नः—अभिधामूलां व्यञ्जनां प्रतिपाद्य संयोगादीन् सोदाहरणान् प्रतिपादयत ।

उत्तरं—संयोगादिभिरनेकार्थकशब्दस्य वाचकत्वे नियन्त्रिते सति अयं शब्दोऽत्रास्यैवार्थस्य वाचक इति निश्चिते सति अभिधयाऽप्रतिपाद्यस्यार्थस्य प्रतीतिकारी यो व्यापारः स एवाभिधामूला व्यञ्जनेत्युच्यते । यथा 'भद्रात्मनो दुरधिरोहतनोः' इत्यादि । अत्रानेकार्थकानां भद्रात्मन इत्यादिशब्दानामभिधाया राज्ञि तदन्वययोग्ये चार्थे प्रकरणेन नियन्त्रणेऽपि सहृदयानां प्रतिभासामर्थ्याद गजस्य तदन्वययोग्यस्य चार्थस्य या प्रतीतिः सा व्यञ्जनयैव । 'सशङ्खचक्रो हरिः' इत्यत्र हरिशब्दोऽ-

नेकार्थकः शङ्खचक्रसंयोगेन विष्णौ नियम्यते। एवमशङ्खचक्रो हरिरित्यत्र विप्रयोगेन हरिशब्दो विष्णौ नियम्यते। 'रामलक्ष्मणौ' इत्यत्र लक्ष्मणसाहचर्यात् राम इत्यस्य दाशरथिरर्थः। रामार्जुनगतिस्तयोरित्यत्र विरोधित्वाद् रामः परशुरामः अर्जुनः कार्त्तवीर्यः। 'स्थाणुं भज भवच्छिदे' अत्र भवच्छेदनरूपप्रयोजनवशात् स्थाणुः शङ्करः। 'सर्वं जानाति देवः' अत्र प्रकरणवशाद् देव इति भवदर्थे। 'कुपितो मकरध्वजः' इत्यत्र कोपरूपचिह्नेन मकरध्वजः कामः। 'देवस्य पुरारातेः' इत्यत्र पुरारातिशब्दसान्निध्याद् देवः शङ्करः। 'मधुना मत्तः कोकिलः' इत्यत्र सामर्थ्यान्मधुशब्दस्य वसन्ते प्रयोगः। 'पातु वो दयितामुखम्' इत्यत्रौचित्यात् मुखशब्दस्य सांमुख्यमर्थः। 'भात्यत्र परमेश्वरः' इत्यत्र राजधानीरूपोद्देशात् परमेश्वरशब्देन राज्ञः प्रतीतिः। 'चित्रभानुर्भाति' अत्र कालवशाद् दिने रवौ रात्रौ वह्नौ चित्रभानुशब्दस्य प्रयोगः। 'मित्रं भाति' 'मित्रो भाति' नपुंसकपुंल्लिङ्गवशात् सुहृदः सूर्यस्य च बोधः। स्वरो वेदे नियामको भवति न तु काव्ये यथा 'इन्द्रशत्रुः' इत्यत्रान्तोदात्तत्वे षष्ठीतत्पुरुषः पूर्वपदप्रकृतिस्वरत्वे बहुव्रीहिः। आदिपदादभिनयादीनां नियामकत्वं बोध्यम्।

इति द्वितीयोल्लासः।



## अथ तृतीयोल्लासः

प्रश्नः—आर्थीव्यञ्जनायाः किं लक्षणम्? वक्तृवैशिष्ट्यादीनां च किमुदाहरणम्?

उत्तरं—वक्तृ[1]-बोद्धव्य[2]-काकु[3]-वाक्य[4]-वाच्य[5]-अन्यसंनिधि[6]-प्रस्ताव[7]-देश[8]-काल[9]ादिवैशिष्ट्यात् सहृदयानां वाच्यलक्ष्यव्यङ्ग्यात्मनोऽर्थस्य योऽन्यस्यार्थस्य धियो हेतुर्व्यापारः स आर्थीव्यञ्जना। क्रमेणोदाहरणम्—'अतिपृथुलं जलकुम्भम्' इत्यत्र कामिनीरूपवक्तृवैशिष्ट्याच्चौर्यरतगोपनं गम्यते। 'औन्निद्र्यं दौर्बल्यम्' इत्यत्र बोद्धव्यस्य (यं बोधयितुं शब्द उच्चार्यते तस्य) वैशिष्ट्यात् सम्बन्धात् दूत्यास्तत्कामुकोपभोगो व्यज्यते। 'तथाभूतां दृष्ट्वा' इत्यत्र काकोः (भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते) वैशिष्ट्यात् मयि न योग्यः खेदः कुरुषु तु योग्य इति

प्रकाशितो भवति। 'तदा मम गण्डस्थलनिमग्नाम्' इत्यत्र वाक्यस्य योग्यताकाङ्क्षासत्तियुक्तपदोच्चयस्य वैशिष्ट्यात् मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत् चलितायां तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं ते इति व्यज्यते। 'उद्देशोऽयम्' अत्र वाच्यस्य वैशिष्ट्यात् प्रकर्षेण विशेषणवत्त्वात् रतार्थं प्रविशेति व्यङ्ग्यम्। 'नुदत्यनार्द्रमनाः' इत्यत्र अन्यसन्निधिवैशिष्ट्यात् सन्ध्या सङ्केतकाल इति तटस्थं प्रति कयाचिद् द्योत्यते। 'श्रूयते समागमिष्यति' इत्यत्र प्रकरणरूपप्रस्ताववैशिष्ट्यादुपपतिं प्रत्यभिसर्तुं प्रस्तुता न युक्तमिति कयाचिन्निवार्यते। 'अन्यत्र यूयं कुसुमावचायम्' इत्यत्र देशवैशिष्ट्याद् विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वयाभिसार्यतामित्याश्वस्तां प्रति कयाचिन्निवेद्यते। 'गुरुजनपरवशप्रिय' अत्र कालवैशिष्ट्यात् अद्य वसन्तसमये यदि व्रजसि तदाहं तावत् न भवामि तव तु न जानामि गतिमिति व्यज्यते। 'द्वारोपान्तनिरन्तरे' इत्यत्र चेष्टावैशिष्ट्यात प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते।

प्रश्नः—न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम्। प्रश्नमात्रेणापि काकोर्विश्रान्तेः। इत्यस्य सन्दर्भस्य कोऽभिप्रायः।

उत्तरं—'तथाभूतां दृष्ट्वा' इत्युदाहरणे काकोर्वाच्यसिद्ध्यङ्गत्वं न व्यङ्ग्यार्थाक्षेपद्वारा। अपि तु न भजति इति प्रश्नमात्रोपस्थापनद्वारैव। तेन हि वाच्यार्थे निष्पन्ने व्यङ्ग्यप्रतीतिस्तस्माद् ध्वनेरेवेदमुदाहरणं न तु गुणीभूतव्यङ्ग्यस्य, यत्र तु व्यङ्ग्योपस्थापनमन्तरा वाच्यार्थस्य सिद्धिर्न भवेत्तत्र च काकोः सामर्थ्यं स्यात्तदुदाहरणं काक्वाक्षिप्तगुणीभूतव्यङ्ग्यस्य भवति। यथा 'मथ्नामि कौरवशतम्' इत्यत्र प्रतिज्ञातकुरुकुलक्षयस्य भीमस्य 'न मथ्नामि' इत्युक्तेर्बाधितत्वाद् वाक्यार्थ एव नोपपद्यते। तत्सिद्ध्यै मथ्नाम्येवेति व्यङ्ग्योपस्थापनद्वारा काकुरेव प्रभवतीति काकुर्वाच्यसिद्ध्यङ्गम्। तद्द्वारीभूतव्यङ्ग्यस्यापि च वाच्यसिद्ध्यङ्गत्वेन गुणीभूततया गुणीभूतव्यङ्ग्यत्वं सूपपन्नम्।

इति तृतीयोल्लासः।



# अथ चतुर्थोल्लासः

प्रश्नः—रसविषये मतानि प्रदर्श्य श्रीमम्मटसम्मतं मतं निर्दिशत।

उत्तरं—रत्यादिस्थायिभावस्य लोके यानि कारणानि कार्याणि सहकारीणि कथ्यन्ते। तान्येव नाट्यकाव्ययोर्विभावा अनुभावा व्यभिचारिण इति कथ्यन्ते। विभावयन्त्यास्वादयोग्यतां नयन्तीति विभावाः। अनुभावयन्ति सूचयन्तीति अनुभावाः। उक्तञ्च 'अनुभावो विकारस्तु भावसंसूचनात्मकः' व्यभिचरितुं शीलं येषां ते व्यभिचारिणः। विभावानुभावव्यभिचारिभिर्व्यक्तः स्थायिभावो रस इति नाम्ना व्यवह्रियते। उक्तञ्च—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः'। अत्र चत्वारि मतानि सन्ति। तथाहि—आलम्बनविभावैर्ललनादिभिरुद्दीपनविभावैरुद्यानादिभिः रत्यादिको भावो जनितः, कटाक्षभुजक्षेपादिभिः सूचितः, निर्वेदादिभिर्व्यभिचारिभिः पुष्टिं नीतः, साक्षात् सम्बन्धेन नायके स्थितोऽपि तत्सदृशवेषधारित्वात् नर्तके आरोप्यमाणो रसपदवाच्यो भवति। अयं भावः—यथा असत्यपि सर्पे दाम्नोऽपि भयमुत्पद्यते तथैव सीताविषयिणी रामरतिर्नर्तकेऽविद्यमानापि नाट्यनैपुण्येन तस्मिन् स्थितेव प्रतीयमाना सहृदयहृदये चमत्कारमर्पयन्ती रसपदवीमधिरोहति। एतन्मते सूत्रार्थस्तु विभावानुभावव्यभिचारिभिः संयोगात् उत्पाद्योत्पादकभावसम्बन्धात् रसस्य निष्पत्तिरुत्पत्तिरिति। उपर्युक्तभट्टलोल्लटमतेऽनुकार्ये रामादावेव रसनिष्पत्तिर्न तु सामाजिके नहि कुत्रचित् कस्यचिदारोपमात्रेण किञ्चिद् भवितुमलमतः श्रीशङ्कुमतमुच्यते। विभावानुभावव्यभिचारिसंयोगाद् अनुमाप्यानुमापकभावसम्बन्धाद् रसस्य निष्पत्तिरनुमितिरित्यर्थः। राम एवायम् अयमेव रामः, इति सम्यक्प्रतीतिः। न रामोऽयमित्यौत्तरकालिके बाधे रामोऽयमिति मिथ्याप्रतीतिः, रामः स्याद्वा न वायमिति संशयप्रतीतिः, रामसदृशोऽयमिति सादृश्यप्रतीतिः एताभ्यो विलक्षणेन चित्रतुरगन्यायेन रामोऽयमिति ज्ञानेन विषयीकृते नटे (पक्षे) 'सेयं ममाङ्गेषु' इत्यादिकाव्यस्य साक्षात्कारणबलात् शिक्षाभ्याससंपादितस्वकार्यप्रकाशनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि कृत्रिमत्वेनागृहीतैर्विभावादिशब्दव्यवहार्यैः संयोगात् अनुमाप्यानुमापकभावसम्बन्धात् सामाजिकैरनुमीयमानोऽपि वस्तुसौन्दर्यबलादास्वाद्यमानत्वेनानुमीयमानविलक्षणः, स्थायित्वेन नटगतत्वेन प्रतीयमानः रत्यादिर्भावो वस्तुतो नटेऽसन्नपि सामाजिकानां धारावाहिन्या इच्छया आस्वाद्यमानो रसो भवति। श्रीशङ्कुमतेऽपि कथितानुमितिविरहेऽपि रसोदयाद् रसं साक्षात्करोमीत्यनु-

व्यवसायाच्च ग्रन्थकारस्यासंमतिः। अतः विभावानुभावव्यभिचारिभिः संयोगाद् भोज्य-भोजकभावरूपसम्बन्धात् रसस्य निष्पत्तिर्भुक्तिरित्यर्थः। अयं भावः—भट्टनायकमते व्यापारद्वयमस्ति भावकत्वव्यापारो भोजकत्वव्यापारश्च, आद्येन साधारणीकरणं क्रियतेऽर्थात् सीतादयो विभावाः रामसम्बन्धिनी रतिश्च कामिनीत्वरतित्वादिनैवोपस्थाप्यते भोजकत्वव्यापारेण सा रतिः सहृदयैरास्वाद्यते। रतेरास्वाद एव रसनिष्पत्तिः। अस्मिन् मतेऽपि व्यापारद्वयकल्पने प्रमाणाभावः साक्षात्कारस्य तथाविधत्वकल्पने प्रमाणाभावश्चातः सिद्धान्तभूतं ग्रन्थकृत्सम्मतमभिनवगुप्ताचार्यपादानां मतमुच्यते। स्थायिनां विभावादिभिः समं संयोगात् व्यङ्ग्यव्यञ्जकभावरूपात् सम्बन्धात् विभावादीनामेव वा परस्परं संयोगात् मिलनात् रसस्य निष्पत्तिरभिव्यक्तिरित्यर्थः। रतिकारणादीनामनुभवादसकृदनुमिता रतिः सहृदयहृदयमधितिष्ठति। किञ्चित् कालानन्तरं सुनिपुणमनुष्ठितयोः रामादिव्यक्तिविशेषसम्बन्धिरतिकारणविभावादिप्रतिपादकयोरपि नाट्यकाव्ययोः सहृदयसहकृतभावनाविशेषमहिम्ना साधारणीकरणं भवति। तेन च साधारणीकृतैर्विभावादिभिः सहृदयहृदयावस्थिता सा रतिर्व्यञ्जनया अभिव्यक्ता सामाजिकानामास्वाद्यतामायाति। एतादृशास्वाद एव रसनिष्पत्तिरिति।

**प्रश्नः—सभेदान् सोदाहरणान् सस्थायिभावान् रसान् लिखत।**

उत्तरं—रसा नव सन्ति नवैव च तेषां स्थायिभावाः। तद्यथा—

| रसनाम | स्थायीभावः | उदाहरणम् |
|---|---|---|
| (१) शृंगारः (क) संभोगः | रतिः | शून्यं वासगृहं···॥ ३० ॥ (श्लो०) |
| (ख) विप्रलंभः १. अभिलाषहेतुकः | ” | प्रेमार्द्राः प्रणयः···॥ ३२ ॥ |
| २. विरहहेतुकः | ” | अन्यत्र व्रजतीति···॥ ३३ ॥ |
| ३. ईर्ष्याहेतुकः | ” | सा पत्युः प्रथमा···॥ ३४ ॥ |
| ४. प्रवासहेतुकः | ” | प्रस्थानं वलयैः···॥ ३५ ॥ |
| ५. शापहेतुकः | ” | त्वामालिख्य···॥ ३६ ॥ |
| (२) हास्यम् | हासः | आकुञ्च्य पाणि···॥ ३७ ॥ |
| (३) करुणः | शोकः | हा मातस्त्वरिता···॥ ३८ ॥ |
| (४) रौद्रः | क्रोधः | कृतमनुमतं दृष्टं···॥ ३९ ॥ |
| (५) वीरः | उत्साहः | क्षुद्राः सन्त्रासमेते···॥ ४० ॥ |
| (६) भयानकः | भयम् | ग्रीवाभंगाभिरामं···॥ ४१ ॥ |
| (७) बीभत्सः | जुगुप्सा | उत्कृत्योत्कृत्य कृत्तिं···॥ ४२ ॥ |
| (८) अद्भुतः | विस्मयः | चित्रं महानेष बताव···॥ ४३ ॥ |
| (९) शान्तः | निर्वेदः, शमो वा | अहौ वा हारे वा···॥ ४४ ॥ |

**प्रश्नः—भावादीनां च किं लक्षणं किं चोदाहरणम् ।**

**उत्तरम्**—निम्नलिखितकोष्ठे द्रष्टव्यम्—

| भावनाम | लक्षणम् | उदाहरणम् |
|---|---|---|
| (१) भावः | | |
| (क) देवविषया रतिः | रतिर्देवादिविषया । | कण्ठकोणविनिविष्टमीश ··· ४ |
| (ख) अञ्जितव्यभिचारी | ,, | जाने कोपपराङ्मुखी ··· ॥४७ |
| (२) रसाभासः | तदाभासा अनौचित्यप्रवर्तिताः | स्तुमः कं वामाक्षि ··· ॥४८॥ |
| (३) भावाभासः | ,, | राकासुधाकरमुखी ··· ॥४९॥ |
| (४) भावशान्तिः | भावस्य शान्तिः प्रशमः | तस्याः सान्द्रविलेपन ··· ॥५०॥ |
| (५) भावोदयः | भावस्योदयः | एकस्मिन् शयने ··· ॥५१॥ |
| (६) भावशबलता | भावानां शबलता पूर्वपूर्वोपमर्देन परस्परोदयः | क्वाकार्यं शशलक्ष्मणः क्व च ··· |
| (७) भावसन्धिः | भावयोरेककालमेव तुल्यकक्षयोरास्वादः, समकालमेव विरुद्धयोरपि तुल्यरूपयोरास्वादो वा | उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः ··· ॥५२॥ |

**प्रश्नः—सोदाहरण-ध्वनेर्भेदा लेख्याः ।**

**उत्तरम्—ध्वनेर्भेदा उदाहरणानि च यथा—**

| ध्वनेर्भेदाः | उदाहरणानि |
|---|---|
| १. अर्थान्तरसङ्क्रमितवाच्यो ध्वनिः | त्वामस्मि वच्मि विदुषाम् ॥ २३ ॥ |
| २. अत्यन्ततिरस्कृतवाच्यः ,, | उपकृतं बहु तत्र किमुच्यते ॥ २४ ॥ |
| ३. अलक्ष्यक्रमव्यङ्ग्यः ,, | शून्यं वासगृहं विलोक्य ॥ ३० ॥ |
| ४. शब्दशक्तिमूलकालङ्कारस्य ,, | उल्लास्य कालकरवाल० ॥ ५४ ॥ |
| ५. शब्दशक्तिमूलकवस्तुनः ,, | पथिक ! नात्र स्रस्तरमस्ति ॥ ५८ ॥ |
| ६. स्वतः सम्भविना वस्तुना वस्तुनो व्यक्तिः | अलसशिरोमणिर्धूर्त्तानाम् ॥ ६० ॥ |
| ७. ,, ,, ,, अलङ्कारस्य ,, | धन्याऽसि या कथयसि ॥ ६१ ॥ |
| ८. ,, ,, अलङ्कारेण वस्तुनः ,, | दर्पान्धगन्धगजकुम्भकपाट० ॥ ६२ ॥ |
| ९. ,, ,, ,, अलङ्कारस्य ,, | गाढकान्तदशनक्षतव्यथा० ॥ ६३ ॥ |
| १०. कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुनः ,, | कैलासस्य प्रथमशिखरे ॥ ६४ ॥ |
| ११. ,, ,, अलङ्कारस्य ,, | केशेषु बलात्कारेण तेन च ॥ ६५ ॥ |

| ध्वनेर्भेदाः | उदाहरणानि |
| --- | --- |
| १२. कविप्रौढो० अलङ्कारेण वस्तुनः व्यक्तिः | गाढालिङ्गनरभसोद्यते ॥ ६६ ॥ |
| १३. ,, ,, अलङ्कारस्य ,, | या स्थविरमिव हसन्ती ॥ ६७ ॥ |
| १४. कविनिबद्धवक्तृप्रौढो० वस्तुना वस्तुनः ,, | ये लङ्कागिरिमेखलासु ॥ ६८ ॥ |
| १५. ,, ,, अलङ्कारस्य ,, | सखि ! विरच्य्यमानस्य ॥ ६९ ॥ |
| १६. ,, अलङ्कारेण वस्तुनः ,, | आर्द्रार्द्रकरजरदनक्षतैस्तव ॥ ७० ॥ |
| १७. ,, ,, अलङ्कारस्य ,, | महिलासहस्रभरिते तव ॥ ७१ ॥ |
| १८. शब्दार्थोभयशक्तिमूलो ध्वनिः | अतन्द्रचन्द्राभरणा ॥ ७२ ॥ |
| १९. पदप्रकाश्योऽर्थान्तरसङ्क्रमितवाच्यः ,, | यस्य मित्राणि मित्राणि ॥ ७३ ॥ |
| २०. ,, अत्यन्ततिरस्कृतवाच्यः ,, | खलव्यवहारा दृश्यन्ते ॥ ७४ ॥ |
| २१. ,, अलक्ष्यक्रमव्यङ्ग्यः ,, | लावण्यं तदसौ कान्तिः ॥ ७५ ॥ |
| २२. ,, वस्तुनाऽलङ्कारस्य व्यक्तिः | रुधिरविसरप्रसाधित ॥ ७७ ॥ |
| २३. ,, ,, वस्तुनः ,, | भुक्तिमुक्तिकृदेकान्त० ॥ ७८ ॥ |
| २४. ,, स्वतःसम्भविना व० व० ,, | सायं स्नानमुपासितम् ॥ ७९ ॥ |
| २५. ,, ,, ,, अलङ्कारस्य ,, | तदप्राप्तिमहादुःखविलीना ॥ ८० ॥ |
| २६. ,, ,, अलङ्कारेण वस्तुनः ,, | क्षणदाऽसावक्षणदा ॥ ८२ ॥ |
| २७. ,, ,, ,, अलङ्कारस्य ,, | तव वल्लभस्य प्रभाते ॥ ८३ ॥ |
| २८. ,, कविप्रौढोक्तिसिद्धेन व० व० ,, | रात्रीषु चन्द्रधवलासु ॥ ८४ ॥ |
| २९. ,, ,, ,, अलङ्कारस्य ,, | निशितशरधियाऽर्पयत्यनङ्ग ॥ ८५ ॥ |
| ३०. ,, ,, अलङ्कारेण वस्तुनः ,, | वार्यमाणोऽपि पुनः सन्ताप० ॥ ८६ ॥ |
| ३१. ,, ,, ,, अलङ्कारस्य ,, | स मुग्धश्यामलाङ्गो धम्मिल्लः ॥ ८७ ॥ |
| ३२. ,, कविनिबद्धवक्तृप्रौढो० व० व० ,, | नव पूर्णिमामृगाङ्कस्य ॥ ८८ ॥ |
| ३३. ,, ,, ,, अलङ्कारस्य ,, | सखि ! तव निधुवनसमरे ॥ ८९ ॥ |
| ३४. ,, ,, अलङ्कारेण वस्तुनः ,, | प्रविशन्ती गृहद्वारम् ॥ ९० ॥ |
| ३५. ,, ,, ,, अलङ्कारस्य ,, | ज्योत्स्नया मधुरसेन च ॥ ९२ ॥ |
| ३६. प्रबन्धेऽर्थशक्तिमूलो ध्वनिः | अलं स्थित्वा श्मशानेऽस्मिन् ॥ ९३ ॥ |
| ३७. धातुरूपपदैकदेशे रसस्य ,, | रतिकेलिहृतनिवसनकर० ॥ ९७ ॥ |
| ३८. नामरूपपदैकदेशे ,, ,, | प्रेयान् सोऽयमपाकृतः ॥ ९८ ॥ |
| ३९. प्रत्ययरूपपदैकदेशे ,, ,, | पथि पथि शुकचञ्चूचारु० ॥ ९९ ॥ |
| ४०. संशयास्पदध्वनिद्वयसङ्करः | क्षणप्राघुणिका देवरजायया ॥ १११ ॥ |
| ४१. अनुग्राह्यानुग्राहकैकव्यञ्जकानुप्रवेश-रूपौ सङ्करौ संसृष्टिश्च | स्निग्धश्यामलकान्तिलिप्त ॥ ११२ ॥ |

## ध्वनेः परिगणनम्

| १ लक्षणामूलकः अविवक्षित० | | २ अभिधा विवक्षित० |
|---|---|---|
| १ | २ | १ |
| अर्था. | अत्यन्त. | असं. |
| पदं[1] वाक्यं[2] | पदं[1] वाक्यं[2] | पद १ |
| | | वाक्य २ |
| | | प्रबन्ध ३ |
| | | पदैकदेश ४ |
| | | रचना ५ |
| | | वर्ण ६ |
| ४ | | |

संलक्ष्य

| १ | २ | ३ |
|---|---|---|
| शब्द० | अर्थ० | उभय० |
| | | वाक्य १ |

| | | स्वतः० | कविप्रौ० | कविनि० |
|---|---|---|---|---|
| वस्तु १ | | | | |
| अलं. २ | वस्तुना वस्तु | १ व. व. | १ व. व. | १ |
| पद ३ | वस्तुनालङ्कारः | २ व. अलं. | २ व. अलं. | २ |
| वाक्य ४ | अलङ्कारेण वस्तु. | ३ अलं. व. | ३ अलं. वस्तु | ३ |
| | अलङ्कारेणालङ्कारः | ४ अलं. अलं. | ४ अलं. अलं. | ४ |

| | | | |
|---|---|---|---|
| | ४ | ४ | ४ |
| पदवाक्यप्रबन्ध | ३ | ३ | ३ |
| | १२ | १२ | १२ |

| | |
|---|---|
| स्वतः | १२ |
| कविप्रौ. | १२ |
| कविनि. | १२ |
| | ३६ |

| | |
|---|---|
| अविवक्षित० | ४ |
| असं० | ६ |
| शब्द० | ४ |
| उभय० | १ |
| | ५१ |
| अन्योन्ययोजने | ५१ |
| | २६०१ |
| त्रिरूपेण सङ्करेण गुणने | ३ |
| | ७८०३ |
| एकरूपया संसृष्टया | २६०१ |
| | १०४०४ |
| शुद्धभेदयोजने | ५१ |
| सकलभेदाः | १०४५५ |

इति चतुर्थोल्लासः।

## अथ पञ्चमोल्लासः

प्रश्नः—सोदाहरणा गुणीभूतव्यङ्ग्यभेदा लेख्याः।

उत्तरं—अगुणं गुणं भूतमिति गुणीभूतं गुणीभूतञ्च तद् व्यङ्ग्यञ्चेति गुणीभूतव्यङ्ग्यम्। गुणपदेनात्र गौणं बोध्यम्। यत्र वाच्यार्थादधिकचमत्कारि व्यङ्ग्यं न भवेत्तत्र गुणीभूतव्यङ्ग्यमिति व्यवहारः। तस्य निम्नाष्टौ भेदाः सन्ति।

| व्यङ्ग्यभेदाः | उदाहरणानि | व्यङ्ग्यभेदाः | उदाहरणानि |
|---|---|---|---|
| १. अगूढव्यङ्ग्यम् | | | |
| (क) अर्थान्तरसं. | यस्यासुहृत्कृत- | ४. अस्फुटम् | अदर्शने दर्शनोत्कण्ठा |
| (ख) अत्यन्ततिर. | उन्निद्रकोकनद- | ५. सन्दिग्धप्राधान्यम् | हरस्तु किञ्चित्परिलुप्त- |
| (ग) अर्थशक्तिमू. | अत्रासीत्फणिपाश- | ६. तुल्यप्राधान्यम् | ब्राह्मणातिक्रमत्यागः |
| २. अपरस्याङ्गम् | अयं स रशनोत्कर्षी- | ७. काकाक्षिप्तम् | मथ्नामि कौरवशतम् |
| ३ वाच्यसिद्ध्यङ्गम् | भ्रमिमरतिमल- | ८. असुन्दरम् | वानीरकुञ्जोड्डीन- |

प्रश्नः—अभिहितान्वयवादान्विताभिधानवादयोः किं स्वरूपमिति प्रतिपाद्य काव्यप्रकाशकर्तुः कतरस्मिन् वादे पक्षपातः कुतश्चेति लिख।

उत्तरं—अभिहितानां स्वस्ववृत्त्या पदैरुपस्थितानामन्वय इति वादिनां भाट्ट-

मीमांसकानां मतमुच्यते । आकाङ्क्षायोग्यतासन्निधिवशात् = यत् पदं विना यत् पदं शाब्दबोधं जनयितुं नालं तत्पदेन तत्पदस्याकाङ्क्षा भवति । एकपदार्थेऽपरपदार्थसम्बन्धो योग्यता । पदानामविलम्बेनोच्चारणं सन्निधिः । एतद्वशात् परस्परसम्बन्धे बुभुत्सिते तात्पर्याख्यवृत्तिप्रतिपाद्यो वाच्यार्थविलक्षणशरीरोऽपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम् । पदानि अन्वितानि भूत्वा पश्चाद्विशिष्टमर्थं कथयन्तीति यो वदति सोऽन्विताभिधानवादीत्युच्यते । 'देवदत्त गामानये'त्युत्तमवृद्धप्रयोगात् सास्नादिमतीं व्यक्तिं मध्यमवृद्धे संचारयति मध्यमवृद्धचेष्टया तस्य वाक्यस्य तदर्थबोधकतामनुमायानन्तरं 'गां नयाश्वमानय' इति प्रयोगे गवापसरणमश्वाहरणं च दृष्ट्वा अन्वयव्यतिरेकाभ्यां क्रियापदार्थान्विते कारके कारकपदस्य, कारकपदार्थान्वितक्रियायां च क्रियापदस्य शक्तिं बालो निश्चिनोति । ततः प्रयोगकाले तस्य प्रथममन्वितबुद्धिर्जायते । तेनाभिधयैव बोधोपपत्तौ किं तात्पर्याख्यवृत्तिस्वीकारेणातः परस्परान्विताः पदार्था एव वाक्यार्थो न तु पदार्थानां सम्बन्धो वाक्यार्थः । न च गामानयेत्यत्र यदानयपदं तदेवाश्वमानयेत्यत्र, तेनानयपदस्यापरपदार्थान्वितानयनमेवार्थो न तु गवान्वितानयनमतोऽन्वितविशेषबोधाय तात्पर्यवृत्तिरवश्यं स्वीकार्येति वाच्यम्, यथा नैयायिकमते गोत्वेन सामान्यतः शक्तिग्रहेऽपि आकाङ्क्षादिवशाद् गोविशेषस्य बोधस्तथैव सामान्यतोऽपरपदार्थान्वितशक्तिग्रहेऽपि आकाङ्क्षादिवशात् समीपोच्चारितगामिति पदार्थान्वयबलाच्च गवान्वितत्वविशेषान्वयस्य बोधः । अभिहितान्वयवाद एव ग्रन्थकृत्सम्मतस्तद्वादस्य बहुवचनतया निर्देशात् । अन्विताभिधानवादस्यैकवचनतया निर्देशाच्च । अत एव द्वितीयोल्लासेऽस्मिन् पञ्चमोल्लासे व्यञ्जनास्थापनावसरे च 'ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः' 'अभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्ती ध्वननादिपर्यायोऽनपह्नवनीय एव' इति क्रमेण ग्रन्थकृद्भिरुक्तम् ।

प्रश्नः—'शब्दवृद्धाभिधेयाँश्च प्रत्यक्षेणात्र पश्यति' इमां कारिकां व्याख्यायाभिहितान्वयवादेऽन्विताभिधानवादे च व्यङ्ग्यार्थस्य कुतो नावगम इति प्रतिपादयत ।

उत्तरं—व्युत्पित्सुर्बालः, शब्दः श्रूयमाणः देवदत्त गामानयेत्यादिरूपः, वृद्धौ प्रयोजकप्रयोज्यौ, अभिधेयः गवानयनादिरूपः, एतान् प्रत्यक्षेण प्रत्यक्षहेतुना श्रोत्रादिना अत्र व्युत्पत्तिकाले पश्यति । श्रोतुः प्रतिपन्नत्वं ज्ञानवत्त्वमनुमितिकरणभूतया चेष्टया अनुमिनोति । अनुमानप्रकारस्तु—अयमेतच्छब्दजन्यैतदर्थगोचरज्ञानवान्

एतच्छब्दश्रवणानन्तरमेतदर्थगोचरचेष्टावत्त्वात् । अन्यथानुपपत्तिरूपया अर्थापत्त्या द्वयात्मिकां शक्तिं वाच्यवाचकरूपं सङ्केतं बोधयेत् । अर्थात् गामानयेति वाक्येन गवानयनरूपार्थस्य प्रतीतिर्गामानयेति वाक्यस्य गवानयनरूपार्थेन सह वाच्यवाचकभावसम्बन्धमन्तरानुपपन्ना । अनन्तरं त्रिप्रमाणकं प्रत्यक्षानुमानार्थापत्तिरूपप्रमाणत्रयाधिगतं सङ्केतम् अवबोधेत जानीयात् । यस्मिन्नभिहितान्वयवादे वाक्यार्थोऽनुकूलत्वादिरप्यभिधयोपस्थितो न भवति तत्र व्यङ्ग्यार्थस्य ज्ञानं भविष्यतीति तु दूरापेतम् । यस्मिन्नन्विताभिधानवादे गवानयनादिविशेषार्थोऽप्यसङ्केतितत्वादवाच्यस्तत्र व्यङ्ग्यार्थस्य बोधो भविष्यतीति को नाम वक्तुमीष्टे । अभिहितान्वयवादेऽनन्वितोऽर्थः वृत्तित्वादिरूपः, अन्विताभिधानवादेऽन्वितविशेषश्च पदार्थो नास्ति । तस्मादुभयनयेऽपदार्थो वाक्यार्थः । यत्र वाक्यार्थोऽप्यपदार्थस्तत्र व्यङ्ग्यार्थावगतिर्न भवितुमर्हति ।

**प्रश्नः—'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' इति व्याख्यायताम् ।**

उत्तरं—ननु नैमित्तिकानुसारेण निमित्तानां कल्पना भवति । अत्र नैमित्तिकी व्यङ्ग्यप्रतीतिस्तस्य निमित्तं शब्द एव । तत्र चाभिधैव व्यापारः किं व्यञ्जनाकल्पनेनेति चेन्न शब्दस्य निमित्तत्वं कीदृशं विवक्षितं कारकत्वं ज्ञापकत्वं वा ? शब्दस्य कारकत्वं नास्ति कुलालादेरेवार्थजनकत्वात् । चरमेऽज्ञातस्य ज्ञापकत्वं न भवितुमर्हति सर्वदार्थप्रतीतिप्रसङ्गात् । ज्ञातस्य ज्ञापकत्वमपि सामान्यरूपेण न तु विशेषविध्यादिरूपेणातो नैमित्तिकानुसारेण निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम् ।

**प्रश्नः—'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः' इति उपपाद्य निराक्रियताम् ।**

उत्तरं—अभिधाव्यापारेणैव व्यङ्ग्यार्थज्ञानं भविष्यति । यतो हि यथा बलवता प्रेरित इषू रिपोर्वर्मच्छेदं मर्मभेदं प्राणहरणञ्च करोति तथैवाभिधया वाच्यार्थ इव व्यङ्ग्यार्थस्यापि ज्ञानं भविष्यत्येवेति किं व्यञ्जनया, तन्न शब्दश्रवणानन्तरं यावानर्थोऽस्ति तत्र शब्दस्याभिधैव व्यापार इत्यङ्गीकारे 'ब्राह्मण पुत्रस्ते जातः कन्या ते गर्भिणी जाता' इत्यादौ हर्षशोकादीनामपि वाच्यत्वं स्यात् । किञ्च लक्ष्यार्थतीरादौ कस्यापि लक्षणाश्रयणं न स्यादभिधयैव सिद्धेः । अन्यच्च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वं यद् भगवता जैमिनिना स्थापितं तत् कथं नाम संगच्छतामभिधाव्यापारेण समकालमर्थोपस्थापकतयाऽर्थविप्रकर्षाभावात् ।

**प्रश्नः—'यत्परः शब्दः स शब्दार्थः' इत्यस्याशयं स्पष्टयत ।**

उत्तरं—ननु यमर्थमुद्दिश्य शब्दः प्रयुज्यते स शब्दार्थ इति यत्पर इत्यादि-

कस्यार्थः । तेन निःशेषच्युतचन्दनेत्यादिकस्य पद्यस्य 'तत्रैव रन्तुं गन्तासि' इत्यर्थोऽस्त्वेवेति किं वृत्त्यन्तरव्यञ्जनाकल्पनेनेति चेन्नोपात्तस्य शब्दस्यैवार्थे तात्पर्यं भवितुमर्हति । सिद्धसाध्यसमुच्चारणे सिद्धं साध्यायोपदिश्यतेऽतोऽप्राप्तस्यैव विधानं भवति न तु प्राप्तस्य । यथा हवनस्यान्यतः सिद्धौ 'दध्ना जुहुयात्' इत्यादौ दध्यादेः करणत्वमात्रं विधीयते । प्रतीतमात्रे तात्पर्यकल्पने तु पूर्वो धावतीत्यादिकस्यापरो धावतीत्याद्यर्थेऽपि प्रयोगः स्यात् ।

प्रश्नः—'यत्तु विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्थाः' इति उपपाद्य निराचक्ष्यताम् ।

उत्तरं—ननूपात्तशब्दस्यैवार्थे तात्पर्यमित्युक्तचरमनुपपन्नं यतो हि 'विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्थाः' इत्यस्य 'एतद्गृहे न भोक्तव्यम्' इत्यत्र तात्पर्यात् । इति चेन्न तत्र चकार एकवाक्यतासूचनार्थ आख्यातघटितवाक्ययोस्तु साक्षान्नान्वयः 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात् ।' इति न्यायात् अतो लक्षणाश्रयेण विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा मास्य गृहे भुङ्क्था इत्युपात्तशब्दार्थे एव तात्पर्यम् ।

प्रश्नः—व्यङ्ग्यस्य वाच्यलक्ष्याभ्यां को भेद इति स्पष्टयत ।

उत्तरं—वाच्योऽर्थः सर्वान् ज्ञातॄन् प्रत्येक एव व्यङ्ग्यार्थस्तु भिन्नः । यथा गतोऽस्तमर्क इत्यस्य वाच्योऽर्थ एक एव व्यङ्ग्यार्थस्तु—सपत्नम्प्रत्यवस्कन्दनावसरः । अभिसरणमुपक्रम्यताम् । सान्ध्यो विधिरुपक्रम्यतामित्यादिर्बहुविधः । निःशेषेत्यादौ वाच्यो निषेधरूपो व्यङ्ग्यस्तु विधिरूपः । 'कथमवनिप' इत्यादौ निन्दास्तुतिरूपेण वाच्यः पूर्वं व्यङ्ग्यस्तु पश्चादिति कालभेदः । वाच्योऽभिधाश्रयो व्यङ्ग्यस्तु व्यञ्जनाश्रय इत्याश्रयभेदः । वाच्यस्य व्याकरणज्ञानं निमित्तं व्यङ्ग्यस्य तु व्याकरणज्ञानं प्रकरणादिसहायप्रतिभानैर्मल्यञ्चेति निमित्तभेदः । वाच्येन बोद्धेति शब्दव्यवहारो व्यङ्ग्येन तु विदग्ध इतीति शब्दव्यवहारभेदः । वाच्येन प्रतीतिः क्रियते व्यङ्ग्येन चमत्कृतिरिति कार्यभेदः । 'कस्य वा न भवति रोषः' इत्यादौ सखीतत्कान्तगतत्वेन विषयभेदः । लक्ष्यादपि व्यङ्ग्यार्थो भिन्नो यतो हि मुख्येनार्थेनानियतसम्बन्धो न लक्षयितुं शक्यते । व्यङ्ग्येन तु प्रकरणादिवशेन नियतसम्बन्धः, अनियतसम्बन्धः, संबद्धसम्बन्धश्च द्योत्यते ।

प्रश्नः—व्यञ्जनाया अभिधाश्रयत्वं कथं न ?

उत्तरं—लक्षणा व्यञ्जनायाः कुत्रचिन्मूलं भवति । लक्षणाश्रयणमेव व्यञ्जनेत्यपि न क्वचिदभिधाया अप्याश्रयणात् । उभयानुसारिणी व्यञ्जनेत्यपि न अवाचकवर्णानुसारेणापि तस्या दृष्टेः । शब्दानुसारिणीत्यपि न नेत्रत्रिभागावलोकनादिनापि तस्याः प्रसिद्धेः ।

प्रश्नः—व्यञ्जनाविषये वेदान्तिमतं प्रतिपाद्य खण्डयत ।

उत्तरं—ननु क्रियाकारकभावो हि धर्मधर्मिभावमन्तरा न भवितुमर्हति । धर्मधर्मिभावश्च संसारस्य मिथ्यात्वेन ब्रह्मणो निर्धर्मकत्वाच्च न भवितुमर्हति । अतः पदपदार्थविभागं विनैव 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिमहावाक्यमखण्डमेवाखण्डं ब्रह्म बोधयतीति वाक्यगम्ये व्यङ्ग्येऽपि वाक्यस्य शक्तिरेवेति चेन्न सांसारिकदशायामाविद्यिकव्यवहारावलम्बिभिः पदपदार्थकल्पना कर्तव्यैवेति वेदान्तमतेऽपि निःशेषेत्यादौ विध्यादिर्व्यङ्ग्य एव ।

प्रश्नः—व्यञ्जनाविषये महिमभट्टमतमनूद्य खण्डयत ।

उत्तरं—ननु वाच्यादसम्बद्धं न प्रतीयतेऽन्यथा यतः कुतश्चिद् यस्य कस्यचिदर्थस्य प्रतीतिप्रसङ्गः । इत्थञ्च व्यङ्ग्यव्यञ्जकभावो व्याप्तिरूपसम्बन्धेनैव भवितुमर्हति । अतः सपक्षसत्त्वविपक्षासत्त्वपक्षसत्त्वरूपत्रयवतो लिङ्गात् साध्यज्ञानमनुमानं यदस्ति तद्रूप एव व्यङ्ग्यव्यञ्जकभावः । तथाहि—'भ्रम धार्मिक' इत्यादिपद्ये गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति । अनुमानप्रकारस्तु—गोदावरीतीरं भीरुभ्रमणायोग्यं सिंहवत्त्वात् यन्नैवं तन्नैवं यथा गृहम् । यत् यत् भीरुभ्रमणं तत्तद् भयकारणनिवृत्त्युपलब्धिपूर्वकमिति व्याप्तेरिति चेन्न हेतोरनैकान्तिकत्वात् । भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागादिना सत्यपि भयकारणे भ्रमति । किञ्च विरुद्धोऽपि हेतुर्यतो हि शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेति आप्तवाक्याभावाद् हेतुसद्भावे संशयोऽपि भवति तत् कथमत्र साध्यसिद्धिः स्यात् । निःशेषच्युतेत्यादौ व्यञ्जकतया यानि चन्दनच्यवनादीन्युपात्तानि तान्युपभोगे एव न निबद्धानि कारणान्तरस्नानादिनापि तेषां सम्भवात् । व्यञ्जनावादिना अधमपदसहायानामेषां व्यञ्जकत्वमुक्तम् । न चात्राधमत्वं प्रमाणसिद्धमिति कथमनुमानम् ? व्याप्त्याद्यभावेऽपि व्यञ्जनावादिमते एवंविधादेवंविधोऽर्थः प्रतीयतेऽतस्तन्मतेऽनैकान्तिकत्वादिकं दूषणं न भवति ।

इति पञ्चमोल्लासः ।



# अथ षष्ठोल्लासः

प्रश्नः—सभेदं सोदाहरणं काव्यं लिखत ।

उत्तरं—काव्यं त्रिविधमस्ति उत्तममध्यमाधमभेदात् । यत्र वाच्याच्चमत्कारिव्यङ्ग्यं भवेत्तत्काव्यमुत्तमं तदेव च ध्वनिरित्युच्यते । वैयाकरणैर्यथा प्रधानभूतस्फोटरूपव्यङ्ग्य-व्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । अयं भावः—अनित्यैर्वर्णैः कथं नामार्थ-प्रतीतिः स्यात् । प्रत्येकपदानुभवजन्यसंस्कारसहितचरमवर्णस्योद्बोधकत्वाङ्गीकारेऽपि यथाऽनुभूयते तथैव स्मर्यते इति नियमाभावात् 'रसः' इत्यनेन सर इत्यस्य 'राजा' इत्य-नेन जरा इत्यस्य बोधः स्यात् । अतो वैयाकरणैः स्फोटः स्वीक्रियते । स्फुटत्यर्थो यस्मात्, स्फुट्यते व्यज्यते इति वा व्युत्पत्तिः । उक्तव्युत्पत्तिद्वयेन 'वर्णव्यतिरिक्तो नादाभिव्यङ्ग्यो-ऽर्थप्रत्यायको नित्यः शब्दः स्फोटः' इति फलति । एवमेवालङ्कारिकैरपि तिरस्कृतं वाच्यं येन तादृशं यद् व्यङ्ग्यं तद्व्यञ्जनसमर्थस्य शब्दार्थयुगलस्य ध्वनिरिति व्यव-हारः कृतः । वैयाकरणसमयेऽपि स्फोटरूपव्यङ्ग्यव्यञ्जको ध्वनिरत्रापि व्यङ्ग्यव्यञ्जकं शब्दार्थयुगलं ध्वनिः । यथा—निःशेषच्युतेत्यत्र तदन्तिकमेव रन्तुं गतासीति प्राधा-न्येनाधमपदेन व्यज्यते । परवेदनानभिज्ञत्वेन परदुःखदातृत्वं तेनाधमत्वम् बोध्यम् । यत्र तु वाच्यापेक्षया व्यङ्ग्यं चमत्कारि न भवति तद् मध्यमं गुणीतभूव्यङ्ग्य-नामकञ्च काव्यं भवति । यथा—'ग्रामतरुणं तरुण्या' इत्यत्र वञ्जुललतागृहे दत्तसंकेता नागतेति व्यङ्ग्यं गुणीभूतं तदपेक्षया वाच्यस्यैव चमत्कारित्वात् ।

यत्र व्यङ्ग्यं स्पष्टं न प्रतीयते तदधमं काव्यं भवति तदेव चित्रमित्युच्यते । तद् द्विविधं शब्दचित्रं वाच्यचित्रञ्च । 'स्वच्छन्दोच्छलदच्छ' इत्यादि शब्दचित्रस्य 'विनिर्गतं मानदमात्ममन्दिरात्' इत्यादि च वाच्यचित्रस्योदाहरणं बोध्यम् । शब्द-चित्रे शब्दो मुख्योऽर्थो गौणः । अर्थचित्रेऽर्थो मुख्यः शब्दो गौण इति ।

इति षष्ठोल्लासः ।



# अथ सप्तमोल्लासः

प्रश्नः—दोषसामान्यस्य लक्षणं प्रतिपाद्य सोदाहरणान् सोपपत्तिकान् पदगतान् दोषान् प्रतिपादयत।

उत्तरं—'उद्देश्यप्रतीतिविघातको दोषः' इति दोषसामान्यस्य लक्षणम्। षोडश पददोषाः सन्ति। श्रुतिकटु १-श्रुतौ कटु यद् भवति तत् श्रुतिकटूच्यते। यथा अनङ्गमङ्गलेत्यादिपद्ये 'कार्तार्थ्यम्' इति पदं श्रवणे कटु विद्यते। च्युतसंस्कृति २—व्याकरणलक्षणहीनं यद् भवति तत् पदं च्युतसंस्कृतीत्युच्यते। यथा—एतन्मन्दविपक्वेत्यादिपद्ये अनुनाथते इति पदं 'आशिषि नाथः' इति वार्तिकविरुद्धत्वाच्च्युतसंस्कृति। अप्रयुक्तम् ३ तथा पठितमपि कविभिर्नादृतम्। यथा—'यथायं दारुणाचार' इत्यादिपद्ये दैवतशब्दः पुंसि पठितोऽपि 'दैवतानि पुंसि वा' इत्यत्र पुंसि कविभिर्न प्रयुज्यते। असमर्थम् ४ शक्तिरहितं, यस्मिन्नर्थे पठितस्तं प्रतिपादयितुमशक्तम्। यथा—'तीर्थान्तरेषु स्नानेन' इत्यत्र हन्तिपदम्। हन्धातुर्गमनार्थे पठितोऽपि तदर्थप्रतिपादनेऽशक्तः। निहतार्थम् ५ उभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम्। 'यावकरसार्द्र' इत्यत्र शोणितशब्द उज्ज्वलीकृतरूपेऽर्थे निहतार्थः। अनुचितार्थम् ६ 'तपस्विभिर्या' इत्यत्र पशुपदं कातरताभिव्यञ्जकत्वादनुचितार्थम्। निरर्थकम् ७ पादपूरणमात्रप्रयोजनकम्। यथा—'उत्फुल्लकमलकेसर' इत्यत्र हि पदम्। अवाचकम् ८ यथा—अवन्ध्यकोपस्येत्यादिपद्ये जन्तुपदमदातर्यर्थे प्रयुक्तं परन्तु तदर्थे जन्तुपदस्य शक्तिरेव नास्ति। अश्लीलम् ९ श्रीरस्यास्तीति श्रीलं सिध्मादित्वान्मत्वर्थीयो लच्प्रत्ययः। रलयोरभेदात् श्लीलं न श्लीलम् अश्लीलम्। अथवा श्रियं लातीति श्रीलम्। स त्रिविधो व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात्। 'साधनं सुमहद् यस्य' 'लीलातामरसाहतः' मदुपवनविभिन्नः' इत्यादीनि क्रमेणोदाहरणानि बोध्यानि। उक्तेषु त्रिषूदाहरणेषु साधनवायुविनाशशब्दा व्रीडादिव्यञ्जकाः। संदिग्धम् १० यथा—'आलिङ्गितस्तत्रभवान्' इत्यत्र वन्द्यामिति पदे वन्दीभूतायामुत वन्दनीयामिति संशयः। अप्रतीतम् ११ यत्केवले शास्त्रे प्रसिद्धम्। यथा—सम्यग्ज्ञानेत्यादिपद्ये आशयशब्दो वासनार्थो योगशास्त्रादावेव प्रयुक्तः। ग्राम्यम् १२ लोके एव प्रसिद्धम्। यथा—राकाविभावरीत्यादिपद्ये कटिपदम्। नेयार्थम् १३ रूढिं प्रयोजनं विना शक्यसम्बन्धमात्रेणाशक्यार्थोपस्थापनम्। यथा—'शरत्कालसमुल्लासि'' इत्यत्र चपेटापातनेन निर्जितत्वं लक्ष्यते। क्लिष्टम् १४ यतोऽर्थप्रतीतिर्व्यवहिता। यथा—अत्रिलोचनसंभूतेत्यादि-

पद्येऽत्रिलोचनसंभूतस्य चन्द्रस्य ज्योतिरुद्गमनेन भासिभिः कुमुदैरित्यर्थो व्यवहितत्वात् क्लिष्टः । अविमृष्टविधेयांशम् १५ अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत् । यथा—मूर्ध्नामुद्वृत्तकृत्तत्यादिपद्ये मिथ्यामहिमत्वं नानुवाद्यमपि तु विधेयम् । विरुद्धमतिकृत् १६ विरुद्धाचासौ मतिश्च, तां करोतीति विरुद्धमतिकृत् । यथा—न त्रस्तं यदि नाम भूतकरुणेत्यादिपद्ये भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति । भवस्य स्त्री भवानी तस्याः पतिरिति रीत्या भवानीपतिशब्दः यज्ञदत्तपत्न्याः पतिरितिवत् पत्यन्तरप्रतीतिं करोति । एषु प्रारम्भिकास्त्रयोदशदोषाः केवलपदगताः समासगताश्च अन्ये क्लिष्टादयः त्रयस्तु समासगता एव ।

प्रश्नः—पदांशदोषान् सोदाहरणान् प्रतिपादयत ।

उत्तरं—श्रुतिकटु—'तद् गच्छ सिद्ध्यै' अत्र ध्यैध्यै इति कटु । 'यथाप्सरोविभ्रम इत्यादिपद्ये' मत्ताशब्दःक्षीबार्थे निहतार्थः । आदावञ्जनपुञ्जेत्यादिपद्ये दृशामिति बहुवचनं निरर्थकम् । चापाचार्यस्त्रिपुरविजयीत्यादिपद्ये विजेय इति कृत्यप्रत्ययः क्तप्रत्ययेऽवाचकः । 'अतिपेलवमतिपरिमितवर्णम्' 'यः पूयते' 'विनयप्रणयैककेतनम्' एषु त्रिषु पेलवपूयप्रेतशब्दाः क्रमेण व्रीडादिव्यञ्जकाः । 'कस्मिन् कर्मणि' इत्यादिपद्ये किं पूर्वं साधुः उत साधुषु चरतीति सन्देहः । किमुच्यतेऽस्येत्यादिपद्ये वचःशब्देन गीःशब्दो लक्ष्यते ।

प्रश्नः—साधारणान् वाक्यगतान् दोषान् सोदाहरणान् प्रतिपाद्यासाधारणान् वाक्यगतान् सोदाहरणान् दोषान् प्रतिपादयत ।

उत्तरं—च्युतसंस्कारमसमर्थं निरर्थकञ्चेति त्रीन् दोषान् विहाय त्रयोदश दोषाः पूर्वमुक्ता वाक्येऽपि भवन्ति । 'सोऽध्यैष्ट', 'स रातु' 'सायकसहायबाहोः' 'कुविन्दस्त्वम्' 'प्राभ्रभ्राड्' 'भूपतेरुपसर्पन्ती' 'तेऽन्यैर्वान्तम्' 'पितृवसतिमहं वसामि' 'सुरालयोल्लासपरः' 'तस्याधिमात्रोपायस्य' 'ताम्बूलभृतगल्लोऽयम्' 'वस्त्रवैदूर्यचरणैः' 'धम्मिल्लस्य न कस्य' 'अपाङ्गसंसर्गितरङ्गितम्' 'श्रितक्षमा रक्तभुवः' इत्यादिषु श्रुतिकटु—अप्रयुक्त-निहतार्थ—अनुचितार्थ—अवाचक-व्रीडा—जुगुप्सा—अमङ्गलाश्लील-सन्दिग्ध—अप्रतीत—ग्राम्य—नेयार्थ—क्लिष्ट—अविमृष्टविधेयांश—विरुद्धमतिकृद्दोषाः क्रमेण बोध्याः ।

प्रतिकूलवर्णम् १ रसप्रतिकूला यत्र वाक्ये वर्णा भवेयुस्तत्, यथा—'अकुण्ठोत्कण्ठया' इत्यत्र । उपहतलुप्तविसर्गम् २-३ उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत्, यथा

'धीरो विनीतः' इत्यादौ। विसन्धि४ विश्लेषः, सन्धौ अश्लीलत्वं, सन्धौ कष्टता वा 'तत उदित उदारहारहारि' 'वेगादुड्डीय गगने' 'उर्व्यसावत्र तर्वाली' इत्यादीनि क्रमेण विसन्ध्युदाहरणानि। हतवृत्तम् ५ हतं वृत्तं यत्र तत्—लक्षणानुसरणेऽप्यश्रव्यम्। न प्राप्तो गुरुभावोऽन्ते लघुना यत्र तत्, रसाननुगुणं वेति त्रिविधं हतवृत्तम्। यथा—'अमृतममृतम्' इत्यादिपद्ये हरिणीछन्दः तस्मिंश्च प्रतिपादं षष्ठाक्षरे यतिरुचिता। परन्त्वत्र चतुर्थपादे 'हा' इति षष्ठाक्षरे परपदानुसन्धानापेक्षत्वेन यतिभङ्गादश्रव्यत्वम्। 'विकसितसहकारतारहारि' अत्र हारिशब्दोऽप्राप्तगुरुभावान्तलघुरस्ति। 'हा नृप हा बुध' इत्यादौ हास्यानुकूलं दोधकवृत्तं विपरीतम्। न्यूनपदम् ६ 'तथाभूतां दृष्ट्वा' इत्यत्रास्माभिः 'खिन्ने' इत्यस्मात् पूर्वमित्थमिति च न्यूनम्। अधिकपदम् ७, यथा—'स्फटिकाकृतिनिर्मलः' इत्यत्राकृतिशब्दः। कथितपदम् ८ 'अधिकरतलतल्पम्' इत्यादौ लीलाशब्दः। पतत्प्रकर्षम् ९ पतन् ह्रसन् प्रकर्ष उत्कर्षो यत्र वाक्ये तत्। अलंकारकृतस्य बन्धकृतस्य वा प्रकर्षस्य यत्रोत्तरोत्तरं पातः। 'कः कः कुत्र न' इत्यादिपद्ये यथा। समाप्तपुनरात्तम् १० समाप्तमथ च पुनरात्तम्। यथा—क्रेङ्कारः स्मरकार्मुकस्य' इत्यत्र तनोतु वः' इति समाप्तमेव वाक्यं नवेत्यादिविशेषणेन पुनरुपादीयतेऽतः समाप्तपुनरात्तम्। द्वितीयार्धगतैकवाचकशेषप्रथमार्धम् ११ द्वितीयार्धगतमेकं वाचकं शेषम् अवशिष्टं यस्य तादृशं प्रथमार्धं यत्र वाक्ये। यथा—'मसृणचरणपातम्' 'भूः सदर्भा तत् तस्मात् मसृणचरणपातं गम्यताम्' इति वाक्यं द्वितीयार्धगतेन तदित्यनेन पूर्यते। अभवन्मतयोगम् १२ अभवन् मतः (इष्टः) योगः (सम्बन्धः) यत्र। यथा-'त्वमेव' सौन्दर्या' इत्यादौ यदित्यत्र तदिति तदानीमित्यत्र च यदेति वचनं नास्ति। अनभिहितवाच्यम् १३ अवश्यवक्तव्यमनुक्तं यत्र। यथा-'त्वयि निबद्धरतेरित्यादौ अपराधस्य लवमपीति वाच्यम्। अस्थानस्थपदम् १४ अस्थानेऽयोग्यस्थाने तिष्ठतीति अस्थानस्थम्। अस्थानस्थं पदं यत्र। यथा-'प्रियेण संग्रथ्य' इत्यादिपद्ये 'काचिन्न विजहौ' इति वाच्यम्। अस्थानस्थसमासम् १५ यथा—'अद्यापि स्तनशैलदुर्गविषमे' इत्यादिपद्ये क्रुद्धस्य चन्द्रमस उक्तौ समासो न कृतः कवेरुक्तौ तु कृतः। संकीर्णम् १६ यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति। यथा—'किमिति न पश्यसि कोपम्' इत्यादौ पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि इमं कण्ठे गृहाणेत्यादिकं बोध्यम्। गर्भितम् १७ यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति। यथा—'लग्नं रागावृताङ्ग्या' इत्यादौ 'विदितं तेऽस्तु' एतत् प्रयोजनं विनैव गर्भितं कृतम्। प्रसिद्धिहतम् १८ प्रसिद्धिमतिक्रान्तम्। 'मञ्जीरादिषु

